THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT GRANTHAMÂLÂ* )

## NO. 71.

( Vedânta Section No 9. )



THE

# BRAHMASUTRA S'ANKARBHASHYAM

By

**S'RI S'ANKARACHARYA**

*With*

THE RATNAPRABHÂ COMMENTARY

By

**S'RĪ GOVINDÂNANDA**



*Edited With Introduction Index, etc.,*

By

**Pandit Dhudhiraj S'astri**

NYÂYOPÂDHYAYA, KAVYATIRTHA



**( Second Part )**



PRINTED PUBLISHED & SOLD BY

JAI KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office, Vidyâ Vilas Press,*

***North of Gopalmandir, Benares City.***

**1931.**

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
७१
वेदान्तविभागे (९) नवमं पुष्पम् ।

श्रीमच्छङ्कराचार्यविरचितं

# ब्रह्मसूत्रशाङ्करभाष्यम् ।

श्रीगोविन्दानन्दप्रणीतया रत्नप्रभया
समन्वितम् ।

न्यायोपाध्याय काव्यतीर्थ पं० ढुण्ढिराजशास्त्रिणा
पाठान्तर-भूमिका-सूत्राधिकरणानुक्रमणिकादिभिश्च
परिष्कृतम् ।

द्वितीयो भागः ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

१९८८.

श्रीः

# भूमिका ।

जद्गुरूपासनया शारदा सारदायिनी ।
जायतेऽतस्तमेवाहं वन्दे सर्वार्थसिद्धये ॥ १ ॥

ॐ तत्सत् ।

## ( १ ) शङ्कराचार्यस्यावतारत्वनिरूपणम् ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ (गी.अ.४.७)

इत्यादिभगवच्छ्रीकृष्णोक्तेर्यदा वयं वैदिकधर्मस्येतिहासमालोचयामस्तदाऽस्य महार्णव-वीचिवदनेकशोऽभ्युत्थानं पतनं चाभूत्, तथाऽभ्युत्थानकाले कस्यचित् पुरुषविशेषस्य भगवदंशेनावतारश्चाजायतेति विचारसरणिमारोहति । अत्रेदं तत्त्वम् । यदा कृतादिषु युगेषु ब्राह्मणादयो वर्णाः स्वभावत एव स्वस्ववर्णाश्रमधर्मेषु लग्नचिता अपि युगधर्मानुसारेण स्वस्ववर्णाश्रमधर्मानुष्ठानेष्वात्मोपासनाऽऽत्मज्ञानयोस्तदुपयुक्तसाङ्गमन्त्रब्राह्मणात्मकवेदानामध्ययनाध्यापनयोश्चाशक्ता अभूवंस्तदा द्वापरान्ते प्रायशः षड्सहस्रहायनपूर्वं वैदिकधर्मपतनसमये निस्तेजस्कतयाऽल्पायुषामल्पबुद्धीनामल्पवीर्याणां च लोकानामुद्दिधीर्षया परमकारुणिको भगवान् विष्णुर्व्यासरूपेणास्मिन् भारतवर्षेऽवातरत् । तथा चोक्तं विष्णुपुराणे ( ३ अं. ३ अ. )—

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ! ।
वेदमेकं स बहुधा कुरुते जगतो हितम् ॥
वीर्य तेजो बलं चाल्पं मनुष्याणामवेक्ष्य सः ।
हिताय सर्वभूतानां वेदभेदान्करोति सः ॥
यथाऽसौ कुरुते तन्वा वेदमेकं पृथक् प्रभुः ।
वेदव्यासाभिधाना तु सा च मूर्तिर्मधुद्विषः ॥ इति ।

तथा वायुपुराणोक्तेन—

द्वापरे तु परावृत्ते मनोः स्वायंभुवेऽन्तरे ।
ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते ॥

इत्यादिवचनेनापि ज्ञायते, यद्वेदवेदांगेतिहासपुराणादिशास्त्राणां पुनः प्रचारोऽभूत्, वैदिकधर्मश्च पुनः सुप्रतिष्ठो बभूवेति । किन्तु प्रायः सार्धद्विसहस्रवत्सरान्ते भगवद्बुद्धदेवमहावीरस्वामिप्रभृतिभिर्जैनमतप्रवर्तकैराचार्यैरवलम्बितेनावैदिकधर्मेण शिरःसमभ्युत्थानं भूयोऽप्याचरितम् । तत्कालीनाशोकप्रभृतिराजशक्तिसाहाय्यं प्राप्य जातप्रबलशक्तिना तेन पुनरप्याहवे वैदिकधर्मं जेतुं यथाशक्त्याक्रमणं कृतम् । एवं क्रमेण लोकेऽवैदिकधर्मप्राबल्येन द्वापरान्ते प्रसिद्धानां नास्तिकानां ब्रह्मसूत्रकालप्राक्कालादारभ्य प्रवृत्तानां बुद्धसंमतानां मतस्य प्राबल्येन पुनरपि वैदिकधर्मभ्रंशमालोच्य ब्रह्मेन्द्रादिभिः प्रार्थितेन भागवता रुद्रेणावैदिकधर्मराज्यमुन्मूलयितुमग्रे कुमारिलभट्टाख्यः स्वसेनानीरवतारितोऽस्यां कर्मभूमौ । स च मीमांसामतावलंबनेन सुगतशिष्यैः परिवेष्टितमभेद्यमवैदिकधर्मावलम्बिनां दुर्गं संभिद्य वैदिकधर्मानुगं प्रवृत्ति-

मार्गं स्थापयामास। ततश्च प्रवृत्तिमार्गेण सत्पथमानीतानां वैदिकधर्मावलंबिनां कर्मस्वेव संलग्नतामालक्ष्य कलौ सद्रूपक्षाद्यभावेन वैदिकक्रियाकर्माक्षमतां चालोच्य निवृत्तिमार्गेण तान् परमपुरुषार्थं प्रापयितुं वैदिकधर्मस्य मूलस्तंभनिखननार्थं च श्रीशंकराचार्यरूपेणावतीर्याद्वैतात्मतत्त्वोपदेशेन प्रवृत्तिप्रतिबन्धनिरासद्वारा वैदिकमार्गं यथावल्लोके संस्थाप्य नास्तिकान्निराचकार। ततश्च व्यासोक्तमेव मार्गमवलंब्योपनिषद्भाष्यसूत्रगीताभाष्यादिकरणेन पुनरपि तन्मूललब्धशक्तिना वैदिकधर्मेण शिरस्समुत्थानं विहितम्। येनावैदिकधर्मः पराजयं स्वीकृत्य बौद्धादिमतेषु प्राणमात्रेणास्तितामधारयत्, यथा वैदिकधर्मस्यैव प्रतिदिनं गौरवमेधते स्म। एवंक्रमेण पुनर्जातबलस्य वैदिकधर्मस्यैवाभ्युदयार्थं नास्तिकाद्युपद्रवशान्तये च रुद्रावतारेण भगवता शंकरेण सर्वत्र भरतखण्डे चतुर्षु दिक्षु मठान्निर्माय तेषु च विद्याधर्मपीठाधिपत्येन धर्माद्वैतात्मतत्त्वोपदेष्टॄन् नियोज्य महद्भूय आपद्भ्यो वैदिकमार्गोऽरक्षीति जानन्त्येव विद्वांसः। न च तथापि *यदा यदेति* परित्राणाय साधूनाम्* इति च वचनं भगवतो वासुदेवस्यैवेति *तत्राहमि*त्यनेन वासुदेवस्यैव ग्राह्यत्वेन कथं शंकरास्यायमवतार इति वाच्यम्। *रुद्राणां शंकरश्चास्मि* इति गीतोक्तेर्भगवता श्रीकृष्णेन स्वाभेदस्य शंकरे प्रतिपादनेन शंकरावतारत्वसंभवात्। नन्वेवमपि अस्यावतारत्वे किं प्रमाणमिति चेन्न।

कलौ रुद्रो महादेवो लोकानामीश्वरः परः।
तदेव साधयेन्नृणां देवतानां च दैवतम् ॥ ३२ ॥
करिष्यत्यवताराणि शङ्करो नीललोहितः।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ ३३ ॥
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम्।
सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शनात् ॥ ३४ ॥
ये तं प्रीता निषेवन्ते येन केनोपचारतः।
विजित्य कलिजान् दोषान् यान्ति ते परमं पदम् ॥ ३५ ॥

इति कूर्मपुराणे ( पू० ३० अ० ) तथा—

शृणु देवि ! भविष्याणां भक्तानां चरितं कलौ।
वदामि संग्रहेणैव श्रवणाद्भक्तिवर्धनम् ॥ ३ ॥
कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके !।
मदंशजातं देवेशि कलावपि तपोधनम् ॥ ४ ॥
केरलेषु तदा विप्रं जनयामि महेश्वरि !।
तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे ! ॥ ७ ॥
कल्पादिमे महादेवि सहस्रत्रितयात्परम्।
सारस्वतास्तथा गौडा मिश्राः कर्णाजिना द्विजाः ॥ ८ ॥
आममीनाशना देवि ! आर्यावर्तानुवासिनः।
औत्तरा विन्ध्यनिलया भविष्यन्ति महीतले ॥ ९ ॥
शब्दार्थज्ञानकुशलास्तर्ककर्कशबुद्धयः।
जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ ॥ १० ॥
वेदबोधकवाक्यानामन्यथैव प्ररोचकाः।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ शिवे ! ॥ ११ ॥
मिश्राः शास्त्रमहाशस्त्रैरद्वैतोच्छेदिनोऽम्बिके !।

कर्मैव परमं श्रेयो नैवेशः फलदायकः ॥ १२ ॥
इति युक्तिपरामृष्टवाक्यैरुद्बोधयन्ति च ।
तेन घोराः कुलाचाराः कर्मसारा भवन्ति च ॥ १३ ॥
तेषामुद्घाटनार्थाय सृजामीशे ! मदंशजम् ।
केरले शलकग्रामे विप्रपत्न्यां मदंशजः ॥ १४ ॥
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः ।
उपनीतस्तदा मात्रा वेदान् सांगान्ग्रहीष्यति ॥ १५ ॥
जैनान् विजित्ने तरसा तथान्यान् कुमतानुगान् ।
तदा मातरमामंत्र्य परिव्राट् स भविष्यति ॥ १६ ॥
व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे ! ।
अद्वैतमेव सूत्रार्थं प्रामाण्येन करिष्यति ॥ १७ ॥
द्वात्रिंशत्परमाय्वन्ते शीघ्रं कैलासमावसेत् ।
एतत्प्रतिगृहाण त्वं पंचलिङ्गं सुपूजयन् ॥ १८ ॥

इत्यादिशिवरहस्योक्तेश्च तस्य शिवावतारत्वे विवादासंभवात् ।

कृते विश्वगुरुर्ब्रह्मा त्रेतायामृषिसत्तमः ।
द्वापरे व्यास एव स्यात्कलावत्र भवाम्यहम् ॥

इति आचार्यशंकरोक्तेश्च तत्र प्रमाणत्वात् । नचास्यावतारत्वे बौद्धावतारवत् संकल्पेऽस्याप्युच्चारः कथं न जायते इति वाच्यम् । कालप्रवर्तकावतारस्यैव संकल्पे निवेशनीयत्वात्, अस्य तु कालबोधकावतारत्वेन संकल्पे निवेशासम्भवात् । एवं चास्यावतारत्वे न कोपि विवाद इति विभावनीयम् ॥

## ( २ ) अथाचार्याणां समयविचारः ।

अत्रैवं वदन्ति समयशोधकाः प्राच्या अर्वाचीनाश्च विद्वांसः ।

( १ ) ख्रीष्टीयद्वादशशताब्द्यां शंकररामानुजयोः समावेशात् स एवाचार्यपादानां समय इति ( Indian Antecovry 13. Part ) इण्डियन एण्टेक्करी १३ पुस्तके ) दक्षिण हिंदुस्थानदेशीयेतिहासमवलंब्य कृते श्रीवैष्णवोत्पत्तिनामके ग्रन्थे एस. एम. पं० नटेशशास्त्रिणां मतम् ।

( २ ) ई. ८०८ नवमशताब्द्यामाचार्यशंकरमहोदया आसन्निति (श्रीमच्छंकरार्यनो समय) नामके ग्रन्थे गुरुस्तोत्रे तत्स्तोत्रकाराणां द्वितीयं मतम् ।

( ३ ) तथा काल्टीप्रान्ते कलापीनाम्नि ग्रामे रमानपेरुमल्लराजो महायुद्धविजयसमये ई० ७८८ तमवर्षात् ८२० तमवर्षपर्यन्ते काले शंकराचार्याणां स्थितिरासीत् इति फाटकोपनामकश्रीकाशीनाथपण्डितमहाशया आहुः ।

( ४ ) एवं दुष्टाचारविनाशाय प्रादुर्भूते महीतले ।
स एव शंकराचार्यः साक्षात्कैवल्यनायकः ॥
निधिनागेशवन्ह्यब्दे (३८८९) विभवे शंकरोदयः ।
अष्टवर्षे चतुर्वेदान्द्वादशे सर्वशास्त्रकृत् ।
शोडषे कृतवान्भाष्यं द्वात्रिंशे मुनिरभ्यगात् ॥
कल्यब्दे चन्द्रनेत्रांकवन्ह्यब्दे (३९२१) गुहाप्रवेशः ।
वैशाखे पूर्णिमायां तु शंकरः शिवतामगात् ॥

इति वेणुग्रामस्थहेरलेकरोपाह्वगोविन्दभट्टलब्धदेवनागराक्षरलिखितपत्रत्रयात्मकग्रंथोक्त्या ई० ७८८ तमे वर्षे शंकराचार्याः जन्मोपलभ्य ८२० तमांग्लाब्दे देहं तत्यजुरिति ( इण्डियन एण्टिक्वेरी ) भारतवर्षीयेतिहासग्रन्थस्यैकादशे भागे प्रोक्तमिति प्रोफेसरविष्णुमहादेवफाटकेमहोदयानां चतुर्थं मतम् । अत्रोऽक्तमतचतुष्टयेष्वाद्यं मतम्

( ५ ) प्रासूत तिष्यशरदामतियातवत्यामेकादशाधिकशतेन चतुःसहस्र्याम् ।
संवत्सरे विभवनाम्नि शुभे मुहूर्ते राधे सिते शिवगुरोर्गृहिणी दशम्याम् ॥

इति शंकरमन्दारसौरभे नीलकण्ठभट्टेनोक्तत्वात ई० ७८८ तमे वर्षे विभववर्षे वैशाखशुक्लदशम्यां श्रीशंकराचार्याणां जन्मनः सिद्धतया तदुक्तेर्माधवीयशंकरविजयोक्ततज्जन्मकालेन विरोधात् वहुपण्डितोक्तिविरोधाच्चासमंजसमेवेति । एवं चाचार्यप्रवराः प्राय आंग्लशकस्याष्टमे शतके आसन्निति सर्वेषां विदुषां मतस्यान्वेषणेन निष्कृष्यते ।

( ६ ) सम्प्रदायविदां मतेपि
निधिनागेभवह्न्यब्दे ३८८९ विभवे मासि माधवे ।
शुक्ले तिथौ दशम्यां तु शंकरार्योदयः स्मृतः ॥

इत्युक्त्या नवाशीत्युत्तराष्टशताधिकत्रिसहस्रीमिते कलियुगस्य वर्षे आंग्लशतकस्य ७८८ वर्षे शंकराचार्याणामवतारः सिद्ध्यति ।

( ७ ) तद्द्वितीयशतके इति केचित् ।

( ८ ) तत्पंचमशतके इत्यन्ये ।

( ९ ) तच्चतुर्दशशतके आचार्यप्रवरा बभूवुरिति 'दविस्तान' कारस्य मतम् ।

( १० ) इदं सर्वं भारतवर्षनाम्नि ग्रंथे स्पष्टं वार्थमहाशयैः प्रोक्तं प्रमाणभावादुपेक्षणीयमिति विद्वांसः ।

( ११ ) 'नहि देवदत्तः स्रुघ्ने संनिधीयमानस्तदहरेव पाटलिपुत्रे संनिधीयते, युगपदनेकत्र वृत्तावनेकत्र प्रसंगात्, देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः' इति ( ब्र० सू० २।१।१८) शांकरभाष्यीयभगवत्पादोक्तदृष्टान्तोपन्यासेन तेषां समये स्रुघ्नाख्यं नगरं बभूव । तच्चांग्लशतकस्य ७५६ तमे वर्षे नदीजलप्रवाहेण नष्टमित्यैतिह्यवेदिभिर्निश्चितत्वात् भगवत्पादानां ततः प्राक्तन एव समयो ग्राह्यो नाग्रिम इति सिध्यतीति केषांचिन्मतम् । एतेन ७८८ तमे वर्षे तेषां जन्मेति वदतां सांप्रदायिकानां मतं परास्तं भवति । अत एव—

( १२ ) ७०० ई० वर्षस्य ७५० वर्षस्य च मध्ये उत्पन्नात्कुमारिलभट्टात्प्राक् श्रीमच्छंकरभगवत्पादा बभूवुरिति स्वलिखितबुद्धेतिहासे तारानाथतर्कवाचस्पतिमिश्रा अप्याहुः ।

( १३ ) एवं कुमारिलभट्टश्रीमच्छंकरभगवत्पादयोः समागमो बभूवेति सर्वेषां तच्चरित्रलेखकानां संमतत्वात तत्समय एवास्य समय इति तर्क्यते । कुमारिलसमयश्च ई० ६५० तमवर्षस्य ७०० तमवर्षस्य च मध्यवर्ती समय इति स एवाचार्यपादानामपि समय इति ( सामविधानब्राह्मणस्योपोद्घाते ) डॉक्टरबर्नेल' महोदयानामपि मतेन सांप्रदायिकमतमसमीचीनमिति प्रतिभाति ।

( १४ ) तथा सूर्यवंशीयवृषदेवनृपते राज्यसमये आचार्याणां नेपालराज्यगमनं प्रतिपादितम् । स च राजा ६३० तमांग्लशतकस्य ६५५ तमांग्लशतकस्य च मध्यकालेऽभूत् इति शंकरभगवत्पादानां ७०० ख्रीष्टीयसप्तमशतकस्याद्यभागे तदन्त्यभागे वा स्थितिरासीदिति सिध्यतीति ( Pleetar ) प्लीटर्नाम पंडिता अपि ( इण्डियनएण्टेक्वरी ) नामकभारतवर्षस्येतिहासे षोडशभागे प्राहुः ।

( १५ ) तथा *'गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तम्'* ( ब्र. सू. भा. ४।३।५) इत्यत्रोक्तबलवर्मादिसमकालिक एव पूर्णवर्मा *नहि वन्ध्यापुत्रो राजा बभूव* प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन' इत्यत्र ( ब्र. सू. भा. २।१।१८ ) तथा *'यथाऽसदेवेदं राज्ञः कुलं सर्वगुणसंपन्ने पूर्णवर्मणि राजन्यसति'* ( छां. उ. शां. भाष्य ) इत्यत्राप्येक एव ग्राह्यः। स च कलेः २००० वर्षानन्तर एव न त्वांग्लशतकस्य सप्तमशतकादिरिति स एव समयो भाष्यकृतां शंकराचार्याणामित्यप्याहुः।

तथा ( १६ ) श्रीसौभाग्यचन्द्रोदयनाम्नि ग्रंथे *वर्षेष्वतीतेषु शतेषु षट्सु तिष्येवतीर्णो भुवि शंकरार्यः*—इत्युक्त्या कलेः षट्शतवर्षेभ्योनंतरं ६०१ तमे वर्षे आचार्यशंकराणामवतार इति भास्कररायाणां मतम्।

( १७ ) मोक्षमूलरमहोदयानां मते तु आंग्लशतकस्य ५९३ वर्षेभ्यः प्राक् सूर्यवंशीये रुद्रवर्मपुत्रे वृषदेवे नेपालदेशाधिपत्यं कुर्वति सति तत्राचार्याणां गमनं बौद्धधर्मखण्डनं च जातमिति स एवाचार्यसमय इति बोध्यम्।

( १८ ) भोजराजसमये पूज्येषु पंडितेषु श्रीशंकराचार्याणां प्रामुख्यमभूदिति भोजप्रबंधे दर्शनात् ८०० वर्षेभ्यः ९०० वर्षेभ्यो वा प्राक् स्थितस्य भोजराजस्यैव समय आचार्याणामित्यपरे।

( १९ ) नवशतावर्षेभ्यः प्राक् शंकराचार्या आसन्निति 'डाक्टरटेलर' महाशया आहुः।

( २० ) सहस्रवर्षेभ्यः प्राक् शंकराचार्याणामवतार इति 'कोलब्रूक' महोदयानां मतम्।

( २१ ) राममोहनराज्ञां मते तु आचार्यपीठपरम्परागणनात् आंग्लशतकस्य सप्तमाष्टमशताब्द्योर्मध्ये शंकराचार्याणां स्थितिर्बभूवेत्यवधार्यते। एवमुपरिनिर्दिष्टानां मतानां पर्यालोचनयैकसहस्रवर्षेभ्यः प्राक् आचार्यवरा आसन्नित्ययमर्थो बहुसंमतो ज्ञायते।

( २२ ) केचित्तु विक्रमशकस्य पंचदशे वर्षे आचार्याणामवतारः। द्वाविंशे च संन्यासग्रहणमिति वदन्ति। तन्न। श्रृंगेरीमठीयेन विक्रमीयपञ्चसप्ततितमवर्षे स्थितस्याभीरवंशीयस्य पूर्णवर्मराज्ञः समये श्रीशंकराचार्याणां जन्मेति लेखेन विरोधात्।

( २३ ) "धर्मे द्वाविंशतिशके सप्तशद्द्विसहस्रके।
अब्दे सर्वजिते जातः सहे वै पञ्चमे दिने" ॥

इति सदानन्दकृतशंकरदिग्विजयोक्त्या कलेः एकविंशत्युत्तरसप्तशत्यधिकाद्विसहस्रतम वर्षे ( २७७१ ) आचार्याणामवतार इत्यपरे।

"अत्र केचित् अन्वेषकंमन्याः शिवरहस्यस्थं *'सहस्रत्रितयात्परम्'* इति वचनं *सहस्रद्वितयात् परम्* इति पठित्वा किंवदन्त्यादिना विक्रमादित्यासन्नसमये शंकराचार्याणां स्थितिं वदन्ति। तन्न युक्तम्। शंकराचार्यप्रणीतेषु ब्रह्मसूत्रोपनिषद्गीताभाष्येषु समुद्धृतेषु ग्रन्थेषुः इतः पूर्वं त्रयोदशशताब्द्यां निर्मितोपि ग्रंथः समुद्धृत इति तत्पूर्वं द्वात्रिंशद्वर्षपरिमितायूनामाचार्याणां स्थितिस्थापनं त एव कर्तुं शक्नुवंति" इति न्यायवार्तिकभूमिकायां विन्ध्येश्वरीप्रसादद्विवेदिमहोदयाः। एवं सूक्ष्मरीत्या तन्निर्णयार्थं शंकराचार्यशिष्येण चिद्विलासाख्येन २४००० श्लोकात्मकं शंकरजयाख्यं चरितं रचितम्। इदमेव माधवाचार्येण *'प्राचीनशंकरजयसारमाकृष्य लिख्यते'* इत्यादिना स्वग्रन्थे समुद्धृतम्। अनंतानंदगिरिणापि आत्मानमाचार्यशिष्यं ब्रुवता शंकरजयनामा ग्रंथो रचितस्तथा धनपतिसूरिणापि शंकरविजयो निर्मितः। एवमनेकैर्विद्वद्भिर्नानाविधा ग्रंथा विहिताः। साम्प्रतमपि बाबूराजेन्द्रनाथघोषमहोदयेन *'शंकरओरामानुज* नाम्ना ४९१ पृष्ठात्मको निबन्धो वंगभाषायां रचितः।

किन्तु पूर्वप्रदर्शितनीलकंठभट्टादिमतमेव प्रायशः सर्वेषां विदुषां संमतमिति स एवाचार्याणां स्थितिकालो ग्राह्य इति वदामः ॥

## ( ३ ) श्रीशंकराचार्यचरितम् ।

कदाचित्रिदशास्सर्वे जग्मुः कैलासपर्वतम् । तत्र शंभुं प्रणम्याशु प्रार्थयामासुरीदृशम् ॥
देवदेव ! जगत्स्वामिन्द्रष्टव्या भारतस्थितिः । अधुना बौद्धजैनादिमतपाखण्डवादिभिः ॥
समाक्रान्ते मृत्युलोके श्रौतस्मार्तादिका क्रिया । नष्टा सर्वा ततस्तस्याः पुनरुद्धरणाय वै ॥
न भवन्तं विना कश्चिच्छरणन्तत्प्रसीदताम् । श्रुत्वेत्थं तानुवाचेदं वैकल्यं त्यजतामराः ! ॥
मानुषीं तनुमाश्रित्य शंकराचार्यनामिकाम् । चतुर्भिः प्रवरैः शिष्यैः पूरयिष्ये मनोरथान् ॥
भवन्तोपि सहायार्थं मानुषीं तनुमाश्रिताः । प्रतीक्षणं प्रकुर्वन्तु पाखंडध्वंसहेतवे ॥
सुब्रह्मण्येतिनाम्नाऽयं कुमारोपि महीतले । कर्मकांडसमुद्धर्ता भविष्यति द्विजाग्रणीः ॥
मंडनाह्वस्त्वयं ब्रह्मा तत्साहाय्यं करिष्यति । तद्गच्छत स्वस्वकार्यं कर्तुं भारतमंडले ॥
इत्युक्तास्ते विद्वदंशावतारेण भुवं श्रिताः । भट्टपाद इति ख्यातः कुमारो जैमिनेर्मतम् ॥
स्फुटीकुर्वन् राजधानीं सुधन्वनृपतेर्ययौ । तत्र बौद्धान्पराजित्य राज्ञः प्रत्ययकारणात् ॥
यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः।इत्युक्त्वा गिरिश्रृंगात्तु पतन् भूमौ न वै मृतः॥
तदा बौद्धा नृपतिना निहता धर्मविद्विषः । कुमारिलमहेन्द्रेण हतेषु जिनहस्तिषु ॥
निष्प्रत्यूहमवर्धन्त श्रुतिशाखास्समंततः । एवं वैदिकमार्गे तु पुनः स्थितिमवापिते ॥
कालटीनामकग्रामे वसतो भार्यया सह । विदुषः श्रीशिवगुरोर्भक्त्या तुष्टो वृषध्वजः ॥
स्वप्ने पुत्रवरं दत्वा सुमुहूर्ते तु तद्गृहे । अवतीर्णः शंकराख्यस्तदा विष्ण्वादयो सुराः ॥
पद्मपादादिनाम्ना वै जाताः शास्त्रदृशो भुवि । दुर्वासाशापतो जज्ञे भारत्याख्या तु शारदा ॥
पत्नी मंडनमिश्रस्य विश्रुता विदुषी ह्यभूत् । शंकरोपि यदाऽऽचार्यगृहे वासं चकार ह ॥
विद्याभ्यासार्थमाजह्रे भैक्ष्यं तत्रैकदा ह्यभूत् । विस्मापनं चरित्रं तु श्रूयतामवधानतः ॥
विप्रालये देहि भिक्षामित्युक्तोवाच तद्वधूः । न वयं दानयोग्या हि कृता दैवेन भो बुध ! ॥
इदमामलकं तावद्गृहाणेति, ददौ तदा । सन्तुष्टस्तद्दानमात्राच्छ्रियं दत्वा जगाम ह ॥
लक्ष्मीरण्याज्ञया तस्याऽवसद्विप्रगृहे सदा । एवमध्ययनान्ते तु निवृत्तः शङ्करो गृहम् ॥
तत्र मातुः सेवनार्थं तत्क्लेशविनिवृत्तये । नदीं प्रापयति स्मासौ गृहद्वारमिति श्रुतम् ॥
आश्चर्यकारकं वृत्तं ततः केरलराजतः । प्राप्तं भैक्षादिकं सर्वं कुभोग इति तत्यजे ॥
अल्पायुषं परिज्ञाय मुनिभ्योऽन्त्याश्रमेच्छया । मातरं समनुज्ञाप्य यदाऽऽज्ञां नैव लब्धवान् ॥
ततः कदाचित्सरितोन्तः प्रविश्य स शङ्करः । धृतो ग्राहेणांब ! हेति चुक्रोशार्तस्वरेण वै ॥
माता तस्य स्वरं ज्ञात्वा विललाप भृशं तदा । यदि मे जीवितेच्छा तेऽनुज्ञामन्त्याश्रमे कुरु ॥
येन मे भविता ग्राहान्मोचनं नान्यथेति च । इत्युक्तया तथेत्युक्तस्सद्यस्तद्ग्राहबन्धनात् ॥
मुक्तः संन्यासमालम्ब्य सांत्वयित्वा ऽथमातरम् । तथाऽऽज्ञप्तो बांधवैश्च यतिवेषधरस्तु सः ॥
व्रजन्ददर्श गोविन्दपूज्यपादान् गुहान्तरे । दृष्ट्वा प्रणम्य तुष्टाव स्तोत्रैस्तेन प्रसादिताः ॥
पप्रच्छुः पूज्यपादास्तं कोसि दंडिस्वरूपधृक् । ततः श्रीशंकरः प्राह निवृत्तिपरया दृशा ॥

मनोबुद्ध्यहंकारचित्तानि नाहं श्रोत्रं न जिह्वा न च घ्राणनेत्रम् ।
न च व्योम भूमिर्न तेजो न वायुश्चिदानंदरूपः शिवोहं शिवोहम् ॥

इति तद्वचनाज्ज्ञात्वा ह्यवतीर्णं तु शङ्करम् । उपदिश्य च वेदान्ततत्त्वसारं यथाविधि ॥
शिष्यं चकार तेनायमाचार्यः प्रथितोऽभवत् । एकदा नर्मदापूरघोषेणान्तरितं गुरोः ॥
समाधिं भावयन्सद्यः संप्रोक्ष्य सलिलं ध्रुवम् । कमण्डलौ स्वकीये तु निखिलं संन्यवेशयत् ॥

इत्यद्भुतमुदन्तं तु श्रुत्वा लोकमुखाद्गुरुः । वेदान्ततत्त्वविद्वेदवेदाङ्गानां च पारगः ॥
गोविन्दयतिराट् प्राह मुदाऽऽचार्यं जद्गुरुम् । शारदाकाशवत्तत्त्वं भातं ते स्वधियाऽनया ॥
गत्वा तदाऽऽनन्दवनं मुमुक्षूणां हिताय वै । तिष्ठ तेभ्यो व्याससूत्रभाष्यादिव्यपदेशतः ॥
उपदेशं सदा कुर्वन् विश्वनाथं च पूजयन् । इत्याज्ञां स्वगुरोर्लब्ध्वा काशीवासं चकार सः ॥
तत्रान्तेवासिनः सर्गे बभूवुश्चित्सुखादयः । ततः कदाचिच्चण्डालस्वरूपेण शिवः पथि ॥
विवादं तेन वै कृत्वा सन्तुष्टस्तु वरान्ददौ । येनाचार्यः कर्मठांस्तु मण्डनादीन्पराजितान् ॥
कृत्वा प्रसिद्धिमापेदे भारते सुस्थिरां खलु । ततः कदाचिदाचार्यशिष्यः ख्यातः सनन्दनः ॥
जान्हवीदक्षिणात्तीरादाहूतोन्यैर्मनीषिभिः । नौकाभावात्कथं तत्र गन्तव्यमिव चिन्तयन् ॥
श्रीगुरोश्चरणं ध्यायन् प्रविष्टः सलिलान्तरे । तत्र लेभे सुपद्मानि पादन्यासार्थमादरात् ॥
नद्या स्वयं प्रापितानि ततः स गुरुमागतः । शङ्करोऽपि ददौ तुष्टः पद्मपादेति नाम वै ॥
ततः कदाचिद्विजययात्रार्थमुद्यतो गुरुः । मार्गे प्रयागमागत्य भट्टपादं ददर्श सः ॥
प्राभाकरादिशिष्यैश्च वृतं नास्तिकखण्डकम् ।स्वकृतान् भाष्यग्रन्थादीन् श्रावयित्वाप्यतोषयत् ॥
स चाऽपि गिरिशृंगादिपतनोदन्तमात्मनः । कथयित्वाऽनुशुश्रावाऽद्वैततत्त्वं विशुद्धये ॥
मण्डनं वादकथया पराजित्य तु कारय । भाष्यवार्तिकमित्येवमाचार्याय न्यवेदयत् ॥
तत आचार्य आगत्य माहिष्मत्यां जगद्गुरुः । मण्डनं वादभिक्षार्थं याचते स्म च तद्गृहे ॥
मध्यस्था तद्विवादेऽभूच्छारदा मण्डनप्रिया । ततस्तयोर्विवादे हि मण्डनं तु पराजितम् ॥
दृष्ट्वा भार्य्या स्वयं वादं कर्तुं तेन समुद्यता । कामशास्त्रीयप्रश्नेन, ततो मासात्परं त्वहम् ॥
करिष्ये वादमित्युत्वाऽऽचार्यो राजानमाश्रितः । परकीयप्रवेशाख्यविद्यया, ज्ञातवान् यदा ॥
कामशास्त्रं समग्रं च तदा तेन पराजिता । भार्यापि मण्डनस्येति वृत्तमाश्चर्यकारकम् ॥
श्रुत्वा को नाम पांडित्यविषयं न च विस्मयेत् । तत आचार्यशिष्योभून्मण्डनोऽपि सुरेश्वरः ॥
श्रेष्ठिप्रभाकरस्यापि पुत्रः शिष्यत्वमागतः । हस्तामलकनाम्ना वै विश्रुतः सोभवत्पुरा ॥
हस्तामलकवद्ब्रह्माहमिति तत्त्वनिरूपणात् । आचार्येति विख्यातं तस्यापि ज्ञानवैभवम् ॥
मनसा गिरिनाम्नेऽन्तेवासिनेऽपाठयत् यतः । चतुर्दशापि विद्यास्तु, तेनापि च स्तुतो मुहुः ॥
वृत्तैस्त्रोटकसंज्ञैस्तु त्रोटकाख्यामवाप सः । एतेषामपि वर्तन्ते चित्राणि चरितानि वै ।
किन्तु विस्तारभयतो न लिख्यन्ते मयाऽङ्गतः । अङ्गिनः शंकरस्यैवोट्टङ्कितानि यथाश्रुति ॥
एवं दिग्विजयं कृत्वा शंकरः स्वमतेन वै । द्वैतादिमतभेदानां मूलोच्छेदं चकार सः ।
येनाद्वैतमते लोकप्रवृत्तिर्बहुधाऽभवत् । एवं कृतार्थ आचार्यः कैलासमगमत्ततः ॥

## ( ४ ) शाङ्करभाष्यविषयोपन्यासः ।

तत्र भवान् भगवान् भाष्यकरोऽनवरततन्तन्यमानपरमपुरुषनियमनातिक्रमणजनिततन्निग्रहसंकल्पविषयतया दुरभिभवभवदहनदन्दह्यमानान् सरभसेन प्रतिकूलवातेन नीयमानानिव सांयात्रिकगणान् पवनाशनवराधिष्ठितभवनवासिन इव कुटुम्बिनः हुतवहपरीतकाष्ठमध्यवर्तिन इव कीटान् महाप्रवाहमध्यगतानिव जम्बूकान् जन्तूनवलोक्य निरवधिकरुणार्द्रहृदयः श्रीबादरायणप्रणीतां चतुरध्यायीं जीवब्रह्मैकत्वसाक्षात्कारहेतुं श्रवणाख्यविचारप्रतिपादकान्न्यायाननुपदर्शयन्तीं निखिलाध्यात्मविद्यासु श्रेयस्करीं श्रेष्ठां शारीरकमीमांसां ब्रह्ममीमांसोत्तरमीमांसाद्यपरपर्यायामवलंब्य तदुपरि भाष्य (१)चकारेति नातिरोहितं विदुषाम् ।

(१) ब्रह्मसूत्रभाष्यवदशोपनिषद्भाष्यादयो १२१ ग्रन्था भगवता शंकरेण तथा तन्मुख्यशिष्यैश्च शिवपंचाक्षरीभाष्यादयोऽनेके ग्रंथा विनिर्मितास्तेषां सूचीपत्रमन्यत्र मुद्रितमतो नात्र विस्तरभयान्निवेशितं तत्रैव द्रष्टव्यम् ।

तत्र *प्रथमे समन्वयाख्येऽध्याये* सर्वेषामपि वेदान्तवाक्यानां साक्षात्परंपरया वा प्रत्यगभिन्नेऽद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रदर्शितः। तत्रापि *प्रथमे* *पादे* स्पष्टब्रह्मलिंगयुक्तानां वाक्यानां विचारो विहितः। *द्वितीये* अस्पष्टब्रह्मलिंगवाक्यानि विवेचितानि। *तृतीये*ब्रह्मलिंगयुक्तानामुपास्यब्रह्मविषयाणां वाक्यानां विचार इति पादत्रयेण वाक्यविचारं समाप्य *चतुर्थे पादे* प्रधानविषयत्वेन सन्दिह्यमानानामव्यक्ताजादिपदानां चिन्तनमिति प्रथमाध्यायार्थो बोध्यः।

एवं *द्वितीयेऽविरोधाध्याये* पूर्वोक्तसमन्वये सम्भावितस्मृतितर्कादिविरोधमाशंक्य तत्परीहारपूर्वकमविरोधप्रदर्शनम्। तत्र *प्रथमे* *पादे* सांख्ययोगकाणादस्मृतिभिस्तत्प्रयुक्तैस्तर्कैश्च वेदान्तसमन्वयविरोधपरिहारः। *द्वितीये च* स्वपक्षस्थापनपूर्वकं परपक्षनिराकरणेन चोक्तसांख्यादिमतानां दुष्टत्वं प्रतिपादितम्।*तृतीये पादे* महाभूतसृष्ट्यादिप्रतिपादकश्रुतीनां जीवविषयाणां च श्रुतीनां पूर्वापरभागयोः क्रमेण परस्परविरोधपरिहारः। *चतुर्थे तु* इन्द्रियादिविषयश्रुतीनां विरोधप्रतिक्षेपवर्णनमिति।

तथा *तृतीये साधनाख्येऽध्याये* सर्वसाधनानां वर्णनम्। तत्र *प्रथमे पादे* जीवस्य परलोकगमननिरूपणेन वैराग्यं प्रोक्तम्। *द्वितीये च* पूर्वोत्तरभागयोस्त्वन्तत्पदार्थसंशोधनम्। *तृतीये पादे* निर्गुणे ब्रह्मणि नानाशाखापठितः पुनरुक्तपदोपसंहारो वर्णितः। प्रासंगिकं सगुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारयोर्निरूपणं च कृतम्। *चतुर्थपादे* निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमधर्मयज्ञदानादीनि, अन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च कथितानि।

एवं *चतुर्थे फलाध्याये* सगुणनिर्गुणविद्ययोः सपरिकरः फलविशेषनिर्णयः कृतः। तत्र *प्रथमे पादे* श्रवणाद्यभ्यासेन निर्गुणं ब्रह्म, उपासनावृत्त्या सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणाया जीवन्मुक्तेर्वर्णनम्। *द्वितीते च*म्रियमाणस्योत्क्रान्तिप्रकारचिन्तनम्। *तृतीये पादे* सगुणब्रह्मविदो मृतस्योत्तरमार्गो निरूपितः। चतुर्थे तु पूर्वभागेन निर्गुणब्रह्मज्ञस्य विदेहकैवल्यप्राप्तिवर्णनम्। उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोकस्थितेरभिधानम्॥ इदमेव च सर्वशास्त्राणां मूर्धन्यं शास्त्रान्तरं पुनः सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशंकरभगवत्पादोक्तप्रकारेणेति तात्पर्यम्।

## (९) उपसंहारः।

तदेवं प्रौढेः परां काष्ठामारूढस्यास्य ग्रन्थरत्नस्य निगूढतरभाष्यकृदाशयप्रकटनालंकर्मीणरत्नप्रभाख्यव्याख्यायुतस्य मुद्रणे बद्धपरिकरैः काशीस्थविद्याविलासयन्त्राधिपतिभिरस्य परिशोधनादिसंस्करणे नियोजितोहमस्य परिशोधनमकरवम्। अत्र च पूर्णानन्दयतिभिः कृता चतुःसूत्र्यन्ता पूर्णानन्दी बझेइत्युपाह्वैः भाऊशास्त्रिभिर्दत्ता निवेशितेति धन्यवादाहाणान्तेषामुपकारान्कदापि न विस्मरिष्यामः। तदेवं महता श्रमेण कृतेप्यस्य परिशोधनकर्मणि दृष्टिदोषाद्वा प्रमादाद्वा वेदान्तशास्त्रे व्युत्पत्त्यपरिपाकाद्वा संजातानां स्खलितानां प्रबोधनेनानुग्रहं करिष्यन्ति विचक्षणा इत्याशास्ते—

अगस्त्याश्रमः।
दीपावली
१९८८

विदुषामनुचरः।
ढुण्ढिराजशास्त्री

# द्वितीयाऽध्याये तृतीयः पादः ॥

## १ वियदधिकरणम् ।

## तृतीयाध्याये तृतीयः पादः ।

पृ० पं० सू०

## समाप्तेयं ब्रह्मसूत्रशाङ्करभाष्यस्य विषयानुक्रमणिका।

ओं तत्सत्।

## द्वितीयभागीयब्रह्मसूत्रशांकरभाष्यस्थाधिकरणानामकारादिक्रमेण

# अनुक्रमणिका ।

इत्यधिकरणानुक्रमणिका।

# श्रीबादरायणकृतो ब्रह्मसूत्रपाठः ।

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ जन्माद्यस्य यतः ॥ २ ॥ शास्त्रयोनित्वात् ॥ ३ ॥ तत्तु समन्वयात् ॥ ४ ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ हेयत्वावचनाच्च ॥ ८ ॥ स्वाप्ययात् ॥ ९ ॥ गतिसामान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥ आनन्दमयोऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥ नेतरोऽनुपपत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानुमानापेक्षा ॥१८॥ अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥ अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ भेदव्यपदेशाच्चान्यः ॥ २१ ॥ आकाशस्तल्लिङ्गात् ॥ २२ ॥ अत एव प्राणः ॥ २३ ॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥ छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ प्राणस्तथानुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासनात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

इति वैयासिकब्रह्मसूत्रपाठे प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

---

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विविक्षितगुणोपपत्तेश्च ॥२॥ अनुपपत्तेस्तु न शारीरः ॥३॥ कर्मकर्तृव्यपदेशाच्च ॥४॥ शब्दविशेषात् ॥५॥ स्मृतेश्च ॥६॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥ अत्ता चराचरग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥ १४ ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥ अन्तर्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात् ॥ १८ ॥ न च स्मार्त्तमतद्धर्म्माभिलापात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ अदृश्यत्वाद्गुणको धर्म्मोक्तेः ॥२१॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ रूपोपन्यासाच्च ॥ २३ ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ स्मर्य्यमाणमनुमानं स्यादिति ॥ २५ ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ अत एव न देवता भूतञ्च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

इति वैयासिकब्रह्मसूत्रपाठे प्रथमाध्यायस्य द्वितीयः पादः

---

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥ प्राणभृच्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्याञ्च ॥७॥ भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥ धर्म्मोपपत्तेश्च ॥ ९ ॥ अक्षरमम्बरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ दहर उत्तरेभ्यः ॥ १४ ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१९॥ अन्यार्थश्च परामर्शः ॥२०॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥२१॥

अनुकृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्य्यते ॥ २३ ॥ शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ तदुपर्य्यपि बादरायणः सम्भवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥ अत एव च नित्यत्वम् ॥ २९ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥ ज्योतिषि भावाच्च ॥ ३२ ॥ भावात्तु बादरायणोऽस्ति हि ॥३३॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥३४॥ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥३६॥ तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ कम्पनात् ॥ ३९ ॥ ज्योतिर्दर्शनात् ॥ ४० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥४१॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ पत्यादिशब्देभ्यः ॥ ४३ ॥

इति वैयासिकब्रह्मसूत्रपाठे प्रथमाध्यायस्य तृतीयः पादः ।

---

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ महद्वच्च ॥ ७ ॥ चमसवदविशेषात् ॥ ८ ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ प्राणादयो वाक्यशेषात् ॥ १२ ॥ ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ समाकर्षात् ॥ १५ ॥ जगद्वाचित्वात् ॥ १६ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ वाक्यान्वयात् ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ अभिध्योपदेशाच्च ॥ २४ ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥ आत्मकृतेः परिणामात् ॥ २६ ॥ योनिश्च हि गीयते ॥ २७ ॥ एतेन सर्वे व्याख्याताः व्याख्याताः ॥ २८ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे प्रथमाध्यायस्य चतुर्थपादः समाप्तः ।

## अथ द्वितीयोऽध्यायः ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥ इतरेषाञ्चानुपलब्धेः ॥ २ ॥ एतेन योगः प्रत्युक्तः ॥ ३ ॥ न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ भावे चोपलब्धेः ॥ १५ ॥ सत्त्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात् ॥ १७ ॥ युक्तेः शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥२०॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधिकन्तु भेदनिर्देशात् ॥ २२ ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ उपसंहारदर्शनान्नेति चेन्न

क्षीरवद्धि ॥ २४ ॥ देवादिवदपि लोके ॥२५॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि ॥२८॥ स्वपक्षदोषाच्च ॥२९॥ सर्वोपेता च तद्दर्शनात् ॥३०॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ न प्रयोजनवत्त्वात् ॥३२॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥ न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ सर्वधर्म्मोपपत्तेश्च ॥ ३७ ॥

इति श्रीमत्कृष्णद्वैपायन-कृतब्रह्मसूत्रपाठे द्वितीयाध्यायस्य प्रथमः पादः समाप्तः।

---

रचनानुपपत्तेश्चानुमानम् ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ अन्यथानुमितौ ज्ञशक्तिवियोगात् ॥ ९ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात् ॥१५॥ उभयथा च दोषात् ॥ १६ ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः॥१८॥इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्॥१९॥उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥२५॥ नासतोऽदृष्टत्वात् ॥२६॥ उदासीनानामपि चैवं सिद्धिः ॥२७॥ नाभाव उपलब्धेः ॥२८॥ वैधर्म्याच्च न स्वप्नादिवत् ॥२९॥ न भावोऽनुपलब्धेः ॥ ३० ॥ क्षणिकत्वाच्च ॥ ३१ ॥ सर्वथानुपपत्तेश्च ॥३२॥ नैकस्मिन्नसम्भवात् ॥ ३३ ॥ एवञ्चात्माऽकार्त्स्न्यम् ॥३४॥ न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥३५॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥ पत्युरसामञ्जस्यात् ॥ ३७ ॥ सम्बन्धानुपपत्तेश्च ॥ ३८ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ उत्पत्त्यसम्भवात् ॥ ४२ ॥ न च कर्त्तुः करणम् ॥ ४३ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ विप्रतिषेधाच्च ॥४५॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रपाठे द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः।

न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्यसम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्य ब्रह्मशब्दवत ॥ ५ ॥ प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥९॥ तेजोऽतस्तथाह्याह ॥ १० ॥ आपः ॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ विपर्य्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥१६॥ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥१७॥ ज्ञोऽत एव ॥१८॥ उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ स्वात्मना चोत्तरयोः ॥ २० ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि॥२४॥गुणाद्वा लोकवत्॥२५॥व्यतिरेको गन्धवत् ॥ २६ ॥ तथा च दर्शयति ॥२७॥ पृथगुपदेशात् ॥ २८॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्

॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥ कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपादानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्य्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ यथा च तक्षोभयथा॥ ४० ॥ परात्तु तच्छ्रुतेः ॥४१॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥४३॥ मन्त्रवर्णाच्च ॥४४॥ अपि च स्मर्य्यते ॥४५॥ प्रकाशादिवन्नैवं परः ॥४६॥ स्मरन्ति च ॥ ४७ ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥ असन्ततेश्चाव्यतिकरः ॥ ४९ ॥ आभास एव च ॥ ५० ॥ अदृष्टानियमात् ॥ ५१ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रपाठे द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ।

---

तथा प्राणाः ॥ १ ॥ गौण्यसम्भवात् ॥ २ ॥ तत्प्राक्श्रुतेश्च ॥ ३ ॥ तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ अणवश्च ॥ ७ ॥ श्रेष्ठश्च ॥ ८ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥ अणुश्च ॥ १३ ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ प्राणवता शब्दात् ॥ १५ ॥ तस्य च नित्यत्वात् ॥ १६ ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ भेदश्रुतेः ॥ १८ ॥ वैलक्षण्याच्च ॥ १९ ॥ संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रपाठे द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ।

# अथ तृतीयोऽध्यायः ।

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् यथेतमनेवञ्च ॥ ८ ॥ चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥ स्मरन्ति च ॥१४॥ अपि च सप्त ॥ १५ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥ स्मर्य्यतेऽपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ नातिचिरेण विशेषात् ॥ २३ ॥ अन्याधिष्ठिते पूर्व्ववदभिलापात् ॥२४॥ अशुद्धमिति चेन्न शब्दात् ॥२५॥ रेतःसिग्योगोऽथ ॥ २६ ॥ योनेः शरीरम् ॥ २७ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे तृतीयाध्यायस्य प्रथमः पादः ।

सन्ध्ये सृष्टिराह हि ॥१॥ निर्म्मातारञ्चैके पुत्रादयश्च ॥२॥ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ ॥ ५ ॥ देहयोगाद्वा सोऽपि ॥ ६ ॥तदभावो नाड़ीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि चैवमेके ॥ १३ ॥ अरूपवदेव हि तत् प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्य्यते ॥ १७ ॥ अतएव चोपमा सूर्य्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ दर्शनाच्च ॥ २१ ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ तदव्यक्तमाह हि ॥ २३ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ प्रकाशादिवच्चावैशेष्यम् प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ पूर्ववद्वा ॥ २९ ॥ प्रतिषेधाच्च ॥ ३० ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ सामान्यात्तु ॥ ३२ ॥ बुद्ध्यर्थः पादवत् ॥ ३३ ॥स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥ उपपत्तेश्च ॥ ३५ ॥ तथान्यप्रतिषेधात् ॥ ३६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ फलमत उपपत्तेः ॥ ३८ ॥ श्रुतत्वाच्च ॥ ३९ ॥ धर्मं जैमिनिरत एव ॥ ४० ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे तृतीयध्यायस्य द्वितीयः पादः समाप्तः ।

---

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥ उपसंहारोऽर्थभेदाद्विधिशेषवत् समाने च ॥५ ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ नवा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥ आनन्दादयः प्रधानस्य ॥ ११ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आत्मशब्दाच्च ॥ १५ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥ कार्य्याख्यानादपूर्वम् ॥ १८ ॥ समान एवञ्चाभेदात् ॥१९॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥ न वा विशेषात् ॥ २१ ॥ दर्शयति च ॥ २२ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ वेधाद्यर्थभेदात् ॥२५॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तत्युपगानवत्तदुक्तम् ॥ २६ ॥ साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥ छन्दत उभयाविरोधात् ॥ २८ ॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकिकवत् ॥ ३० ॥ अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ इयदामननात् ॥ ३४ ॥ अन्तराभूतग्रामवत् स्वात्मनः ॥ ३५ ॥ अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ सैव हि सत्यादयः ॥ ३८ ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ आदरादलोपः ॥ ४० ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४२ ॥ प्रदानवदेव तदुक्तम् ॥ ४३ ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥ अतिदे-

शाच्च ॥ ४६ ॥ विद्यैव तु निर्धारणात् ॥ ४७ ॥ दर्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ५० ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥ एक आत्मनः शरीरे भावात् ॥ ५३ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५५॥ मन्त्रादिवद्वाऽविरोधः ॥५६॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ नानाशब्दादिभेदात् ॥ ५८ ॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥६०॥ अंगेषु यथाश्रयभावः ॥ ६१ ॥ शिष्टेश्च ॥ ६२ ॥ समाहारात् ॥६३॥ गुणसाधारण्यश्रुतेश्च ॥६४॥ न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ दर्शनाच्च ॥ ६६ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे तृतीयाध्यायस्य तृतीयः पादः समाप्तः ।

---

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् ॥ ३ ॥ तच्छ्रुतेः ॥ ४ ॥ समन्वारम्भणात् ॥ ५ ॥ तद्वतो विधानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥ असार्वत्रिकी ॥ १० ॥ विभागः शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ ॥ नाविशेषात् ॥ १३ ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥ कामचारेण चैके ॥ १५ ॥ उपमर्दञ्च ॥ १६ ॥ ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥२०॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ भावशब्दाच्च ॥२२॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥२५॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥२७॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥ विहितत्वाच्चाश्रमकर्मापि॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि तु त एवाभयलिङ्गात् ॥३४॥ अनभिभवञ्च दर्शयति ॥३५॥ अन्तरा चापि तु तद्दृष्टेः॥३६॥ अपि च स्मर्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥ तद्भूतस्य नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात ॥ ४९ ॥ अनाविष्कुर्वन्नन्वयात ॥ ५० ॥ ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात् ॥ ५१ ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे तृतीयाध्यायस्य चतुर्थपादः समाप्तः ।

## अथ चतुर्थोऽध्यायः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥२॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३॥ न प्रतीकेन हि सः ॥ ४ ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥ अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ यदेव विद्ययेति हि ॥ १८ ॥ भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

इति श्रीकृष्णद्वैपायनकृते ब्रह्मसूत्रपाठे चतुर्थाध्यायस्य प्रथमः पादः ।

---

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अतएव च सर्वाण्यनु ॥ २ ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥४॥ भूतेष्वतः श्रुतेः ॥ ५ ॥ नैकस्मिन् दर्शयतो हि ॥६॥ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ तदपीतेः संसारव्यपदेशात् ॥८॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरेष उष्मा ॥ ११ ॥ प्रतिषेधादिति चेन्न शारीरात् ॥ १२ स्पष्टो ह्येकेषाम् ॥ १३ ॥ स्मर्य्यते च ॥ १४ ॥ तानि परे तथा ह्याह ॥ १५ ॥ अविभागो वचनात् ॥ १६ ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ रश्म्यनुसारी ॥१८॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥ अतश्चायनेऽपि हि दक्षिणे ॥ २० योगिनः प्रति च स्मर्य्यते स्मार्त्ते चैते ॥ २१ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे चतुर्थाध्यायस्य द्वितीयपादः समाप्तः ।

---

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ तडितोऽधिवरुणसम्बन्धात् ॥३॥ आतिवाहिकस्तल्लिङ्गात् ॥४॥ उभयव्यामोहात्तत्सिद्धेः ॥५॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ अप्रतीकालम्बनान्नयतीति स बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥१५॥ विशेषञ्च दर्शयति ॥ १६ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे चतुर्थाध्यायस्य तृतीयपादः समाप्तः ।

---

सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥३॥ अविभागेनैव दृष्टत्वात् ॥ ४ ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वं भावादविरोधं बादरायणः ॥ ७ ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥८॥ अतएव चानन्याधिपतिः ॥ ९ ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् ॥११॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे सन्ध्यवदुपपद्यते ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ जगद्व्यापारवर्जम् प्रकरणादसन्निहितत्वाच्च ॥१७॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥ विकारावर्त्ति च तथा हि स्थितिमाह १९ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥ भोगमात्रसाम्यलिङ्गाच्च ॥२१॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥२२॥

इतिश्रीकृष्णद्वैपायनकृतब्रह्मसूत्रपाठे चतुर्थाध्यायस्य चतुर्थपादः समाप्तः ।

---

समाप्तोऽयं ब्रह्मसूत्रपाठः ॥

# द्वितीयाध्याये तृतीयः पादः ।

[ अत्र पादे पञ्चमहाभूतजीवादिश्रुतीनां विरोधपरिहारः ]

## १ वियदधिकरणम् । सू० १-७

व्योम नित्यं जायते वा हेतुत्रयविवर्जनात् । गतिश्रुतेश्च गौणत्वान्नित्यं व्योम न जायते ॥
एकज्ञानात्सर्वबुद्धेर्विभक्तत्वाज्जनिश्रुतेः । विवर्ते कारणैकत्वाद्ब्रह्मणो व्योम जायते ॥

**न वियदश्रुतेः ॥ १ ॥**

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न । एवं जीवस्य प्राणानां च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते किमस्या-

---

ॐ ब्रह्मणे नमः ।

वियदादिविधातारं सीतास्याब्जमधुव्रतम् ।
नित्यचिद्विश्वकर्त्रात्माऽभिन्नं सर्वेश्वरं भजे ॥ १ ॥

जीवस्यानुत्पत्तिप्रसङ्गेनाऽऽकाशस्याप्युत्पत्त्यसम्भवमाशङ्क्य परिहरन्नादावेकदेशिमतमाह—**न वियदश्रुतेरिति** । वियत्प्राणपादयोरर्थं संक्षिपन् पूर्वपादेन सङ्गतिमाह—**वेदान्तेष्विति** । भिन्नोपक्रमत्वमेवाह—**केचिदित्यादिना** । भूतभोक्तृश्रुतीनां मिथोविरोधशङ्कानिरासो वियत्पादार्थः । लिङ्गशरीरश्रुतीनां तन्निरासः प्राणपादार्थः । यथा मिथोविरोधात् पूर्वापरविरोधाच्च परपक्षाः उपेक्ष्याः, तथा श्रुतिपक्षोऽपि उपेक्ष्य इति शङ्कोत्थाने पादद्वयस्यारम्भात् पूर्वपादेन दृष्टान्तसङ्गतिरिति समुदायार्थः । आकाशवाय्वोरुत्पत्तिमामनन्ति तैत्तिरीयकाः, नामनन्ति छन्दोगाः, जीवस्य प्राणानाञ्चोत्पत्तिं सर्वे एत आत्मनो व्युच्चरन्तीति वाजिनः, एतस्माज्जायते प्राण इत्याथर्वणिकाश्च—आमनन्ति नान्ये । एवमाकाशपूर्विका क्वचित् सृष्टिः, क्वचित्तेजःपूर्विकेति क्रमविरोधः । आदिपदात् "स इमाँल्लोकानसृजत"[ऐत० १।२]इत्यक्रमः, क्वचित् सप्तप्राणाः क्वचिदष्टावित्यादिसंख्याद्वारकश्च विरोधो ग्राह्यः, प्रपञ्चः पादद्वयम्, तथा च पादद्वयस्य श्रुतीनां मिथोविरोधनिरासार्थत्वाच्छ्रुतिशास्त्राध्यायसंगतयः सिद्धाः । अत्राकाशस्योत्पत्त्यनुत्पत्तिश्रुत्योर्मिथोविरोधोऽस्ति न वेति वाक्य-

काशस्योत्पत्तिरस्त्युत नास्तीति । तत्र तावत्प्रतिपाद्यते—'न वियदश्रुतेः' इति । न खल्वाकाशमुत्पद्यते । कस्मात् ? अश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( ६।२।१ ) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत' 'तत्तेजोऽसृजत' ( छां० ६।२।३ ) इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ, न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी, तस्मान्नास्त्योत्पत्तिरिति ॥ १ ॥

## अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति । तैत्तिरीयका हि समामनन्ति—'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इति । ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति । नन्वेकवाक्यतानयोः श्रुत्योर्युक्ता । सत्यम् । सा युक्ता न तु सावगन्तुं शक्यते । कुतः ? 'तत्तेजोऽसृजत' (छां०६।२।३) इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः 'तत्तेजोऽसृजत' 'तदाकाशमसृजत' इति । ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते, यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि(१) । नैवं युज्यते, प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते तैत्तिरीयके चाका-

भेदैकवाक्यत्वाभ्यां सन्देहे यद्युत्पत्तिः तदा वाक्यभेदेन विरोधादप्रामाण्यमनयाः श्रुत्योरिति पूर्वपक्षयिष्यन् आदावनुत्पत्तिपक्षमेकदेशी गृह्णातीत्याह—तत्र तावदिति ॥१॥

उत्पत्तिश्रुतिर्मुख्या नास्तीति गूढाभिसन्धिः सम्प्रति पूर्वपक्षयति सूत्रकारः—अस्ति त्विति । एकवाक्यत्वेन प्रामाण्यसम्भवे किमिति श्रुत्योरप्रामाण्यमिति शङ्कते—नन्वेकवाक्यतेति । एकवाक्यत्वासम्भवादप्रामाण्यं युक्तमित्याह—सत्यमित्यादिना । एकस्य युगपत् कार्यद्वयासम्बन्धेऽपि क्रमेण सम्बन्धसम्भवादेकवाक्यतेति मुख्यसिद्धान्ती शङ्कते—ननु सकृदिति । अप्रामाण्यवादी दूषयति—नैवमिति । क्रमो न युज्यते, द्वयोः श्रुतप्राथम्यभङ्गापत्तेरित्यर्थः । एकस्माद्द्विदलबीजाद्दलद्वयवदस्तूभयं प्रथममित्यत आह—न चेति । वायोरग्निरिति क्रमश्रुतिभङ्गादिति शेषः । छान्दोग्य-

(१) 'योजयिष्याम' इति प्रा० मु० पु० पाठः ।

शस्य, न चोभयोः प्रथमजत्वं संभवति। एतेनेतरश्रुत्यन्तरविरोधोऽपि व्याख्यातः । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यत्रापि 'तस्मादाकाशः संभूतस्तस्मात्तेजः संभूतमि'ति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः । 'वायोरग्निः' (तै० २। १) इति च पृथगाम्नानात् ॥ २ ॥

अस्मिन्विप्रतिषेधे कश्चिदाह—

**गौण्यसंभवात् ॥ ३ ॥**

नास्ति वियत उत्पत्तिरश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति । कस्मात् ? असंभवात् । न ह्याकाशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते । द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति । न चाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति, यस्मिन्समवायिकारणे सत्यसमवायिकारणे च तत्संयोगे आकाश उत्पद्येत । तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं

---

श्रुतेस्तित्तिरिश्रुतिविरुद्धार्थत्वमुक्त्वा तित्तिरिश्रुतेस्तद्विरुद्धार्थत्वमाह—**एतेनेति** । एतत्पदार्थमाह—**तस्मादिति** । छान्दोग्ये श्रुतं तेजसः प्राथम्यम् , अत्र दुर्योज्यमित्यर्थः। किञ्च सत्पदार्थः आत्मा छान्दोग्ये तेजस उपादानं श्रूयते, अत्र तु वायुरिति नैकवाक्यतेत्याह—**वायोरिति** ॥ २ ॥

एवं श्रुत्योर्विरोधादप्रामाण्यमिति पूर्वपक्षे प्राप्ते स एव वियदनुत्पत्तिवादी स्वमतेन प्रामाण्यं ब्रूत इत्याह—**अस्मिन्निति** ।

**गौण्यसम्भवादिति** । एवमाध्यायसमाप्तेरधिकरणेषु प्रथमं विरोधात् श्रुत्यप्रामाण्यमिति पूर्वपक्षफलम् , तत एकदेशिसिद्धान्तः, पश्चान्मुख्यसिद्धान्ते श्रुतीनामविरोधेनैकवाक्यतया ब्रह्मणि समन्वयसिद्धिरिति फलं, क्रमश्चेत्यवगन्तव्यम् । तत्र श्रुत्योर्विरोधे सत्यध्ययनविध्युपात्तयोरप्रामाण्यायोगाद्वियदुत्पत्त्यसम्भवरूपतर्कानुगृहीतच्छान्दोग्यश्रुतिर्मुख्यार्था, इतरा गौणीत्यविरोध इत्येकदेशिमतं विवृणोति—**नास्तीत्यादिना** । आकाशः नोत्पद्यते सामग्रीशून्यत्वादात्मवत् , न चाविद्याब्रह्मणोः सत्त्वाद्धेत्वसिद्धिः, विजातीयत्वेनानयोरारम्भकत्वायोगादसंयुक्तत्वाच्च, संयोग एव हि द्रव्यस्यासमवायिकारणम् , अतः समवाय्यसमवायिनोरभावान्न हेत्वसिद्धिरित्यर्थः । प्रागभावशून्यत्वा-

दूरापेतमेवाकाशस्य भवति । उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति । आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते । किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम् । पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः । तस्माद्यथा लोक आकाशं कुरु आकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति, एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥ ३ ॥

**शब्दाच्च ॥ ४ ॥**

शब्दः खल्वाकाशस्याजत्वं ख्यापयति । यत आह—'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २।३।३) इति न ह्यमृतस्योत्पत्तिरुपपद्यते । 'आकाशवत्सर्वगतश्च नित्यः' इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति । न च तादृशस्योत्पत्तिरुपपद्यते । 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति चोदाहरणम्, 'आकाशशरीरं ब्रह्म' (तै० १।६।२), 'आकाश आत्मा' (तै० १।७।१) इति च । न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति नीलेनेवोत्पलस्य । तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

---

च्चात्मवदाकाशो नोत्पद्यते इत्याह—**उत्पत्तिमतां चेति** । प्रकाशः चाक्षुषानुभवः, **आदिपदात्** तमोध्वंसपाकयोर्ग्रहणम् । मूर्तद्रव्याश्रयत्वं ह्याकाशस्य कार्यम्, तच्च प्रलयेऽप्यस्ति परमाण्वाश्रयत्वात् अतो न प्रागभाव इत्यर्थः । प्रागभावासत्त्वं स्फुटयति—**किं हीति** । स्थूलाश्रयः **अवकाशः**, सूक्ष्माश्रयः **छिद्रम्**, अण्वाश्रयः **सुषिरमिति** भेदः । किञ्चात्मवदाकाशो न जायते विभुत्वादस्पर्शद्रव्यत्वाच्चेत्याह—**पृथिव्यादीति** । तस्मादुक्ततर्कबलाद्गौणी द्रष्टव्येत्यन्वयः । भेदोक्तेर्गौणत्वे वैदिकोदाहरणमाह **वेदेप्यारण्यानिति** । आकाशेष्विति भेदव्यपदेशो गौण इति सम्बन्धः ॥ ३ ॥

न केवलं तर्कादाकाशस्यानुत्पत्तिः, किंतु श्रुतितोऽपीत्याह सूत्रकारः—**शब्दाच्चेति** । नित्यभावस्याऽनादित्वादिति भावः । आत्मेति च शब्द इहोदाहरणमित्यन्वयः । आकाशः शरीरमस्येति बहुव्रीहिणाऽत्यन्तसाम्यभानाद् ब्रह्मवदाकाशस्याऽनादित्वमित्यर्थः ॥ ४ ॥

